एवं दोर्दण्डदर्पं दिशि दिशि परमाश्चर्यदं गापयित्वा
कृत्वा दुर्वृत्तशान्त्या त्रिभुवनमखिलं स्वस्वधर्मप्रवृत्तम्।
भुक्त्वा राज्यं सहस्राधिकमयुतमहो वत्सरान् पूर्णकामः
सार्द्धं पौरैः समस्तैरगमदतिकृती राघवः स्वीयलोकम्॥ १४८॥

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमो यातोऽङ्क एवेत्यसौ॥ १४९॥

समाप्तोऽयं ग्रन्थः।

---

आनीतानि व्योमयानानि विमानानि अनवरतम् अजस्रम् उपेयुः उपजग्मुः, अहो आश्चर्यम्। स्रग्धरा वृत्तम्॥ १४७॥

एवमिति। अतिकृती अतिकुशलः राघवः दिशि दिशि एवम् इत्थं परमाश्चर्यदं दोर्दण्डदर्पं भुजबलगौरवं गापयित्वा कीर्त्तयित्वा विख्याप्येत्यर्थः, दुर्वृत्तानां दुराचाराणां दशाननादीनां शान्त्या संहारेण अखिलं समग्रं त्रिभुवनं स्वस्वधर्मे प्रवृत्तं रतं कृत्वा सहस्राधिकमयुतं वत्सरान् एकादशसहस्रवर्षाणि इत्यर्थः, राज्यं भुक्त्वा पूर्णकामः सिद्धमनोरथः समस्तैः पौरैः पुरवासिभिः सार्द्धं स्वीयलोकं विष्णुलोकं, वैकुण्ठमित्यर्थः, अगमत् जगाम। स्रग्धरा वृत्तम्॥ १४८॥

एष इति। स्वर्गारोहणं नाम यस्य सः॥ १४९॥

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता महानाटक-
व्याख्या समाप्ता।